# नील सरस्वती स्तोत्रम्

घोररूपे महारावे सर्वशत्रुवशङ्करि ।
भक्तेभ्यो वरदे देवि त्राहि मां शरणागतम् ॥ 1 ॥

सुरासुरार्चिते देवि सिद्धगन्धर्वसेविते ।
जाड्यपापहरे देवि त्राहि मां शरणागतम् ॥ 2 ॥

जटाजूटसमायुक्ते लोलजिह्वानुकारिणि ।
द्रुतबुद्धिकरे देवि त्राहि मां शरणागतम् ॥ 3 ॥

सौम्यरूपे घोररूपे चण्डरूपे नमोऽस्तु ते ।
दृष्टिरूपे नमस्तुभ्यं त्राहि मां शरणागतम् ॥ 4 ॥

जडानां जडतां हंसि भक्तानां भक्तवत्सले ।
मूढतां हर मे देवि त्राहि मां शरणागतम् ॥ 5 ॥

हूंहूंकारमये देवि बलिहोमप्रिये नमः ।
उग्रतारे नमस्तुभ्यं त्राहि मां शरणागतम् ॥ 6 ॥

बुद्धिं देहि यशो देहि कवित्वं देहि देहि मे ।
कुबुद्धिं हर मे देवि त्राहि मां शरणागतम् ॥ 7 ॥

इन्द्रादिदेव सवृन्दवन्दिते करुणामयि ।
तारे ताराघिनाथास्ये त्राहि मां शरणागतम् ॥ 8 ॥

अष्टम्यां च चतुर्दश्यां नवम्यां चैकचेतसः ।
षण्मासैः सिद्धिमाप्नोति नात्र कार्या विचारणा ॥ 9 ॥

मोक्षार्थी लभते मोक्षं धनार्थी धनमाप्नुयात् ।
विद्यार्थी लभते विद्यां तर्कव्याकरणादिकाम् ॥ 10 ॥

इदं स्तोत्रं पठेद्यस्तु सततं धनं लभते नरः ।
तस्य शत्रुः क्षयं याति महाप्रज्ञा च जायते ॥ 11 ॥

पीडायां वापि संग्रामे जप्ये दाने तथा भये ।
य इदं पठति स्तोत्रं शुभं तस्य न संशयः ॥ 12 ॥

स्तोत्रेणानेन देवेशि स्तुत्वा देवीं सुरेश्वरीम् ।
सर्वकाममवाप्नोति सर्वविद्यानिधिर्भवेत् ॥ 13 ॥

इति ते कथितं दिव्यं स्तोत्रं सारस्वतप्रदम् ।
अस्मात्परतरं स्तोत्रं नास्ति तन्त्रे महेश्वरि ॥

॥ इति श्री बृहन्नीलतन्त्रे द्वितीय पटले नीलसरस्वती स्तोत्रं संपूर्णम् ॥